शंका चैव समाधानमुभयं पूर्ववद्भवेत् ।
मेलोनाम स कोऽयमिति प्रश्नस्योत्तरमुच्यते ॥ ४५ ॥
नियमेनैव संग्राह्यः षड्जस्तत्पुरतः क्रमात् ।
विद्यमानेषु चतुर्षु स्वरेष्वन्यतरावुभौ ॥ ४६ ॥
तत्रर्षभः पूर्वभावो गांधारस्त्वनुजो भवेत् ।
द्वयोर्मध्यमयोरेकः संग्राह्यो मध्यमो भवेत् ॥ ४७ ॥
नियमेन हि संग्राह्यः पंचमस्तत्पुरस्थिताः ।
स्वराः क्रमेण चत्वारस्तेषु चान्यतरावुभौ ॥ ४८ ॥
संग्राह्यः पूर्वजातोऽत्र धैवतः परिकीर्तितः ।
पश्चाद्भावो निषादः स्यादिति सप्तस्वराश्च ये ॥ ४९ ॥
तेषां च मेलनं मेलो गीतविद्भिः प्रकीर्तितः ।
भेदा द्विसप्ततिस्तस्य भवन्त्यस्माभिरीरिताः ॥ ५० ॥
येनोपायेन मेलास्ते द्विसप्ततिरितिस्फुटाः ।
तमुपायं प्रवक्ष्यामि लक्ष्यज्ञसुखबुद्धये ॥ ५१ ॥
रगारगीरगूचैव रिगिरिगूरुगू तथा ।
षट् भेदा इति पूर्वाङ्गे द्रष्टव्या गीतकोविदैः ॥ ५२ ॥
धनाधनीधनू चैव धिनिधिनूधुनू तथा ।
उत्तराङ्गेऽपि षड्भेदा द्रष्टव्या गीतकोविदैः ॥ ५३ ॥
पूर्वाङ्गगतषड्भेदाः षड्जाद्याः स्युः पृथक् पृथक् ।
उत्ताराङ्गस्थषड्भेदाः पंचमाद्याः पृथक् पृथक् ॥ ५४ ॥
आद्यः पूर्वाङ्गगो भेद उत्तराङ्गस्थितैः क्रमात् ।
योज्यते यदि षड्भेदैः षण्मेलाः संभवन्त्यतः ॥ ५५ ॥
पूर्वाङ्गस्य द्वितीयोऽपि भेदो तेनैव वर्त्मना ।
संयोज्यते यदि तदा षण्मेलाः संभवन्त्यतः ॥ ५६ ॥
एवं तृतीयो भेदोऽपि षण्मेलोत्पादको भवेत् ।
चतुर्थोऽपि तथैव स्यात्पंचमोऽप्येवमेव हि ॥ ५७ ॥

एवं षष्ठोऽपि विज्ञेयः षण्मेलोत्पत्तिकारणम् ।
अतः पूर्वाङ्गभेदानां षण्णामपि पृथक् पृथक् ॥ ५८ ॥
उत्तराङ्गस्थितैः षड्भिर्भेदैः संयोजने कृते ।
षट्षण्मेलप्रकारेण मेला षट्त्रिंशदागताः ॥ ५९ ॥
षट्त्रिंशन्मेलकेष्वेषु प्रतिमेलं च मध्यमः ।
मासंज्ञो यदि मध्ये स्यात्पूर्वमेलाभिधास्तथा ॥ ६० ॥
एतेष्वेव तु षट्त्रिंशन्मेलेषु प्रतिमेलकम् ।
मासंज्ञमध्यमस्थाने मिसंज्ञो यदि मध्यमः ॥ ६१ ॥
निवेश्यते तथा तेषां भवेदुत्तरमेलता ।
इत्यस्माभिः समुन्नीता जाता मेला द्विसप्ततिः ॥ ६२ ॥
ननु त्यक्त्वा मासंज्ञं तु केवलं मध्यमं पुनः ।
मिसंज्ञिकस्य तत् स्थाने मध्यमस्य निवेशनात् ॥ ६३ ॥
त एव पूर्वमेलाः किं भवत्युत्तरमेलकाः ।
इति चोक्ते सदृष्टान्तं परिहारं प्रचक्ष्महे ॥ ६४ ॥
कटाहसंभृतं क्षीरं केवलं दधिबिन्दुना ।
यथा संयोज्यमानं तु दधिभावं प्रपद्यते ॥ ६५ ॥
तथैव पूर्वमेलास्ते मध्यमेन मिसंज्ञिकाः ।
केवलेनापि संयुक्ता भजन्त्युत्तरमेलताम् ॥ ६६ ॥
द्विसप्ततेश्च मेलानां प्रस्तारं लक्षयेऽधुना ।
षट्पंक्तीर्विलिखेत् पूर्वं षण्मेलोत्पत्ति सिद्धये ॥ ६७ ॥
एकैकस्यां पंक्तिकायां सप्तसप्तगृहान् लिखेत् ।
चतुष्कमेकमेवं च सति निष्पद्यते पुनः ॥ ६८ ॥
तथैवैकादशान्यानि चतुष्काणि लिखेत् क्रमात् ।
चतुष्काणि तदेतानि जातानि द्वादशस्फुटम् ॥ ६९ ॥
द्वादशस्वपि चैतेषु चतुष्केषु स्थिता गृहाः ।
सप्त सप्त हि तेष्वाद्यद्वितीयकतृतीयकाः ॥ ७० ॥

गृहाः पूर्वाङ्गसंयुक्ताः कर्तव्या इति निर्णयः ।
पंचमा इति षष्ठाश्च सप्तमाश्च गृहास्तथा ॥ ७१ ॥
उत्तराङ्गेन संयुक्ताः कर्तव्या इति निर्णयः ।
चतुर्थाः पूर्वमेलेषु मासंज्ञेन युता गृहाः ॥ ७२ ॥
त एवोत्तरमेलेषु मिसंज्ञेन युता मताः ।
ततश्च द्वादशस्वेषु चतुष्केषूक्तवर्त्मना ॥ ७३ ॥
जाताः प्रतिचतुष्कं च षट्षण्मेलप्रकारतः ।
मेला द्विसप्ततिः श्रीमद्वेङ्कटाध्वरिकल्पिताः ॥ ७४ ॥

अथास्य प्रस्तारकारः पूर्वमेलाः ।

१

| | | | | | | |
|---|---|---|---|---|---|---|
| स | र | ग | म | प | ध | न |
| | र | ग | | | ध | नि |
| | र | ग | | | ध | नु |
| | र | ग | | | धि | नि |
| | र | ग | | | धि | नु |
| | र | ग | | | धु | नु |

२

| | | | | | | |
|---|---|---|---|---|---|---|
| स | र | गि | म | प | ध | न |
| | र | गि | | | ध | नि |
| | र | गि | | | ध | नु |
| | र | गि | | | धि | नि |
| | र | गि | | | धि | नु |
| | र | गि | | | धु | नु |

३

| | | | | | | |
|---|---|---|---|---|---|---|
| स | र | गु | म | प | ध | न |
| | र | गु | | | ध | नि |
| | र | गु | | | ध | नु |
| | र | गु | | | धि | नि |
| | र | गु | | | धि | नु |
| | र | गु | | | धु | नु |

४

| | | | | | | |
|---|---|---|---|---|---|---|
| स | रि | गि | म | प | ध | न |
| | रि | गि | | | ध | नि |
| | रि | गि | | | ध | नु |
| | रि | गि | | | धि | नि |
| | रि | गि | | | धि | नु |
| | रि | गि | | | धु | नु |

५

| | | | | | | |
|---|---|---|---|---|---|---|
| स | रि | गु | म | प | ध | न |
| | रि | गु | | | ध | नि |
| | रि | गु | | | ध | नु |
| | रि | गु | | | धि | नि |
| | रि | गु | | | धि | नु |
| | रि | गु | | | धु | नु |

६

| | | | | | | |
|---|---|---|---|---|---|---|
| स | रु | गु | म | प | ध | न |
| | रु | गु | | | ध | नि |
| | रु | गु | | | ध | नु |
| | रु | गु | | | ध | नि |
| | रु | गु | | | ध | नु |
| | रु | गु | | | धु | नु |

## अथास्य प्रस्तारकारः उत्तरमेलाः।

१

| | | | | | | |
|---|---|---|---|---|---|---|
| स | र | ग | मि | प | ध | न |
| | र | ग | | | ध | नि |
| | र | ग | | | ध | नु |
| | र | ग | | | धि | नि |
| | र | ग | | | धि | नु |
| | र | ग | | | धु | नु |

२

| | | | | | | |
|---|---|---|---|---|---|---|
| स | र | गि | मि | प | ध | न |
| | र | गि | | | ध | नि |
| | र | गि | | | ध | नु |
| | र | गि | | | धि | नि |
| | र | गि | | | धि | नु |
| | र | गि | | | धु | नु |

३

| | | | | | | |
|---|---|---|---|---|---|---|
| स | र | गु | मि | प | ध | न |
| | र | गु | | | ध | नि |
| | र | गु | | | ध | नु |
| | र | गु | | | धि | नि |
| | र | गु | | | धि | नु |
| | र | गु | | | धु | नु |

४

| | | | | | | |
|---|---|---|---|---|---|---|
| स | रि | गि | मि | प | ध | न |
| | रि | गि | | | ध | नि |
| | रि | गि | | | ध | नु |
| | रि | गि | | | धि | नि |
| | रि | गि | | | धि | नु |
| | रि | गि | | | धु | नु |

५

| | | | | | | |
|---|---|---|---|---|---|---|
| स | रि | गु | मि | | ध | न |
| | रि | गु | | | ध | नि |
| | रि | गु | | | ध | नु |
| | रि | गु | | | धि | नि |
| | रि | गु | | | धि | नु |
| | रि | गु | | | धु | नु |

६

| | | | | | | |
|---|---|---|---|---|---|---|
| स | रु | गु | मि | प | ध | न |
| | रु | गु | | | ध | नि |
| | रु | गु | | | ध | नु |
| | रु | गु | | | धि | नि |
| | रु | गु | | | धि | नु |
| | रु | गु | | | धु | नु |

तदेवमनया रीत्या मेलानां च द्विसप्ततिः ।
स्फुटं प्रभूतयेऽस्माभिः स्वरेषु द्वादशस्वपि ॥ ७५ ॥
रगारिगीत्येत्रमाद्यः सङ्केतः परिकल्पितः ।
तत्सङ्केतप्रकारेण स्वरेषु द्वादशस्वपि ॥ ७६ ॥
सप्त सप्त समादाय प्रतिमेलमपि स्वरान् ।
विंद्यादद्विसप्ततिं मेलान्युक्तप्रस्तारवर्त्मना ॥ ७७ ॥
अथ विज्ञाय तत्वेन मेलान् द्व्यधिकसप्ततिम् ।
तेषां प्रयोगसमये रगारिगीतिमत्कृतः ॥ ७८ ॥
सङ्केतो नैव संग्राह्यः किन्तु पूर्वप्रसिद्धया ।
व्यवहारः सरिगमपधनीत्येव संज्ञया ॥ ७९ ॥
द्विसप्ततेश्चमेलानां कर्तव्य इति निर्णयः ।
ननु द्विसप्ततिर्मेला भंवता परिकल्पिताः ॥ ८० ॥

प्रसिद्धाः पुनरेतेषु मेलाः कतिचिदेव हि ।
दृश्यन्ते न तु सर्वेऽपि तेन तत्कल्पनं वृथा ॥ ८१ ॥
कल्पनागौरवन्यायादिति चेदिदमुच्यते ।
अनन्ताः खलु भेदास्ता देशस्था अपि मानवाः ॥ ८२ ॥
तेषु साङ्गीतिकैरुच्चावचसंगीतकोविदैः ।
ये कल्पयिष्यमाणाश्च कल्प्यमानाश्च कल्पिताः ॥ ८३ ॥
अस्मदादिभिरज्ञाता ये च शास्त्रैकगोचराः ।
ये च देशीयरागास्तद्रागसामान्यमेलकाः ॥ ८४ ॥
येन पन्तुवराळ्याख्यकल्याणिप्रमुखा अपि ।
नानादेशीयरागास्तद्रागसामान्यमेलकाः ॥ ८५ ॥
संग्रहीतुं समुन्नीता एते मेला द्विसप्ततिः ।
ततश्चैतेषु वैयर्थ्यशंका किं कारणं भवेत् ॥ ८६ ॥
न हि संघटते वृत्तरत्नाकरनिरूपिते ।
तत्र प्रस्तारलब्धानां वृत्तानां निकुरुम्बके ॥ ८७ ॥
अस्मदादिप्रसिद्धस्य वृत्तवैयर्थ्यशंसनम् ।
न हि संघटते तालप्रस्तारजनिते पुनः ॥ ८८ ॥
तालजाले प्रसिद्धस्य तालवैयर्थ्यशंसनम् ।
यदि कश्चिन्मदुन्नीतमेलेभ्यस्तद्द्विसप्ततेः ॥ ८९ ॥
न्यूनं वाप्यधिकं वापि प्रसिद्धैर्द्वादशस्वरैः ।
कल्पयेन्मेलने तर्हि ममायासो वृथा भवेत् ॥ ९० ॥
न हि तत्कल्पने भाललोचनोऽपि प्रगल्भते ।
तस्माद्यथैकपंचाशद्वर्णाः स्युर्मातृकाभिधाः ॥ ९१ ॥
न हीयन्ते न वर्धंते तथा मेला द्विसप्ततिः ।
एवं सामान्यतो मेलाः प्रोक्ता द्व्यधिकसप्ततिः ॥ ९२ ॥
अथैतेष्वेव ये मेला लक्ष्यवर्त्मनि विश्रुताः ।
तेष्वहं कतिचिन्मेलान् लक्ष्ये लक्षणसंगतान् ॥ ९३ ॥

प्रतिमेलमपि स्पष्टं श्रुतिर्द्वाविंशतिस्तथा ।
लक्षणं वक्ष्यते पश्चादुद्देशस्तावदादितः ॥ ९४ ॥
पूर्वोक्तमेलप्रस्तारः क्रमेण क्रियतेऽधुना ।
आदिमः सर्वमेलानां मुखारीमेल उच्यते ॥ ९५ ॥
मेलः सामवराळ्याख्यरागस्यातःपरं मतः ।
ततो भूपालमेलोऽथ हेज्जुज्जीमेल ईरितः ॥ ९६ ॥
वसंतभैरवीमेलो गौळमेलस्ततः परम् ।
भैरवीमेल आहीर्यामेलः श्रीरागमेलकः ॥ ९७ ॥
कांभोजिमेलो मेलोऽथ शंकराभरणस्य च ।
सामंतमेलो देशाक्षिमेलो नाटस्य मेलकः ॥ ९८ ॥
मेलश्शुद्धवराळ्याख्यरागस्यातःपरं मतः ।
मेलः पंतुवराळ्याश्च शुद्धरामक्रियायुतः ॥ ९९ ॥
मेलः सिंहरवाख्योऽस्मत्सृष्टरागस्य मेलकः ।
कल्याणीरागमेलश्चेत्याहत्यैकोनविंशतिः ॥ १०० ॥
अस्मदादिप्रसिद्धानां देशभेदप्रचारिणाम् ।
उच्चावचानां रागाणां मेलास्तावद्द्विसप्ततौ ॥ १०१ ॥
मेलेऽषु पूर्वमुक्तेषु शारीरानुगुणत्वतः ।
बुद्धिमद्भिः समुन्नेया इति सर्वं समंजसम् ॥ १०२ ॥
यद्वा सामंतरागोऽयं श्रीरागमेलके गतः ।
रागप्रकरणे ब्रूमो रागान्मेलविशेषजान् ॥ १०३ ॥
उद्दिष्टानां तु मेलानामधुना लक्ष्म वक्ष्महे ।
प्रतिमेलमपि स्पष्टं श्रुतिर्द्वाविंशतिस्तथा ॥ १०४ ॥
शुद्धः सप्तस्वरैर्युक्तो मुखारीमेल उच्यते ।
चतुश्चतुश्चतुश्चैव षड्जमध्यमपंचमाः ॥ १०५ ॥
द्वे द्वे निषादगांधारौ त्रिस्त्री ऋषभधैवतौ ।
इत्यस्य श्रुतयः पूर्वैर्द्वाविंशतिरुदाहृताः ॥ १०६ ॥
पूर्वोक्तमेलप्रस्तारे भेदोऽयं प्रथमो मतः ।

१ इति मुखारी मेलः ।

षड्जशुद्धश्च रिगमा शुद्धौ पंचमधैवतौ ॥ १०७ ॥
निषादः काकलीनाम एतैर्युक्तः स्वरैस्तु यः ।
मेलः सामवराळ्याख्यरागस्यायमुदाहृतः ॥ १०८ ॥
षड्ज एकार्षभे तिस्रो द्वे गे च मपयोः पृथक् ।
चतस्रश्च चतस्रश्च धे तिस्रः पंच नौ स्मृताः ॥ १०९ ॥
इत्यस्य श्रुतयो ज्ञेया द्वाविंशतिरिति स्फुटम् ।
पूर्वोक्तमेलप्रस्तारे भेदोऽयं स्यात्तृतीयकः ॥ ११० ॥

२ इति सामवराळीमेलः ।

षड्जः शुद्धर्षभः साधारणगांधार एव च ।
शुद्धाश्च मपधा ज्ञेया कैशिक्याख्यो निषादकः ॥ १११ ॥
एभिः सप्तस्वरैर्युक्तः प्रोक्तो भूपालमेलकः ।
तिस्रस्तिस्रश्च तिस्रश्च तिस्रः सरिगमाश्रयाः ॥ ११२ ॥
चतस्रः पंचमे तिस्रो धैवते तिस्र एव नौ ।
इत्यस्य श्रुतयो ज्ञेया द्वाविंशतिरितिस्फुटम् ॥ ११३ ॥
पूर्वोक्तमेलप्रस्तारे जातो भेदोऽयमष्टमः ।

३ इति भूपालमेलः ।

गांधारोऽन्तरनामान्ये स्वराः शुद्धाः प्रकीर्तिताः ॥ ११४ ॥
एतावत् स्वरसंभूतो हेज्जुज्जो मेल ईरितः ।
षड्जे च तिस्र ऋषभे तिस्रो गे पंच मध्यमे ॥ ११५ ॥
एका स्यात् पे चतस्रः स्युर्धे तिस्रो द्विर्निषादके ।
इत्यस्य श्रुतयो ज्ञेया द्वाविंशतिरिति स्फुटम् ॥ ११६ ॥
अयं त्रयोदशो भेदो मेलप्रस्तारके भवत् ।

४ इति हेज्जुज्जिमेलः ।

षड्जः शुद्धर्षभश्चैव गांधारोऽन्तरसंज्ञिकः ॥ ११७ ॥

शुद्धाश्च मपधाः कैशिक्यभिधानो निषादकः ।
वसंतभैरवीमेलः स्वरैरेतैः समुत्थितः ॥ ११८ ॥
षड्जे तिस्रस्तु ऋषभे तिस्रो गे पंच मध्यमे ।
एकैव पे चतस्रः स्युस्तिस्रस्तिस्रो धन्योश्च ताः ॥ ११९ ॥
इत्यस्य श्रुतयो ज्ञेया द्वाविंशतिरिति स्फुटम् ।
अयं च मेलप्रस्तारे ज्ञेयो भेदश्चतुर्दशः ॥ १२० ॥

५ इति वसंतभैरवी मेलः ।

षड्जः शुद्धर्षभश्चैव गांधारोऽन्तरसंज्ञिकः ।
मपधाख्यास्वराः शुद्धाः काकल्याख्यनिषादकः ॥ १२१ ॥
एतावत्स्वरसंभूतो गौळमेलः प्रकीर्तितः
एका षड्जे तु ऋषभे तिस्रो गे पंच मध्यमे ।
एकैव पे चतस्रः स्युस्तिस्रो धे पंच नौ मताः ॥ १२२ ॥
इत्यस्य श्रुतयो ज्ञेया द्वाविंशतिरिति स्फुटम् ।
अयं पंचदशो भेदो मेलप्रस्तारके स्मृतः ॥ १२३ ॥

६ इति गौळमेलः ।

षड्जश्च पंच श्रुतिकर्षभः साधारणाह्वयः ।
गांधारो मध्यमः शुद्धः पंचमः शुद्धधैवतः ॥ १२४ ॥
कैशिक्याख्यनिषादश्चेत्येतावत्स्वरसंभवः ।
भैरवीनामरागः स्यादिति मेलसमाह्वयः ॥ १२५ ॥
षड्जस्तिस्र ऋषभः पंच एका गे तिस्रो मध्यमे ।
चतस्रः पे धे च तिस्रो निषादे तिस्र एव च ॥ १२६ ॥
इत्यस्य श्रुतयोऽस्माभिर्द्वाविंशतिरुदीरिताः ।
त्रिंशतिर्भेदसंभूतो मेलप्रस्तारके स्मृतः ॥ १२७ ॥

७ इति भैरवीमेलः ।

षड्जश्च पंचश्रुतिको ऋषभश्च तथापरः ।
साधारणाख्यगांधारः शुद्धाश्च मपधास्तथा ॥ १२८ ॥

काकल्याख्यनिषादश्चेत्याहरीमेलके स्वराः ।
एका षड्जेऽथ ऋषभे पंच गे त्वेकिका मता ॥ १२९ ॥
तिस्रश्चतस्रो मपयोर्धे तिस्रः पंच नौ स्मृताः ।
इत्यस्य श्रुतयोऽस्माभिर्द्वाविंशतिरुदाहृताः ॥ १३० ॥
भेदोऽयमेकाविंशोस्मिन्मेलप्रस्तारके स्मृतः ।

८ इति आहरीमेलः ।

षड्जश्च पंचश्रुतिक ऋषभाख्यस्वरः परः ॥ १३१ ॥
साधारणाख्यगांधारः शुद्धौ पंचममध्यमौ ।
पंचश्रुतिधैवतश्च कैशिक्याख्यनिषादकः ॥ १३२ ॥
एतैः सप्तस्वरैर्जातो श्रीरागस्य तु मेलकः ।
तिस्रः षड्जेऽथ ऋषभे पंच गे त्वेकिकैव मे ॥ १३३ ॥
तिस्रः पे तु चतस्रः स्युर्धे पंचैकैव नौ स्मृताः ।
इत्यस्य श्रुतयोऽस्माभिर्द्वाविंशतिरुदाहृताः ॥ १३४ ॥
अयं द्वाविंशतिको भेदः मेलप्रस्तारके भवेत् । ऋतो भेदा

९ इति श्रीरागमेलः ।

षड्जोऽथ पंचश्रुतिको ऋषभोऽन्तरसंज्ञिकः ॥ १३५ ॥
गांधारश्च मपौ शुद्धौ पंचश्रुतिकधैवतः ।
कैशिक्याख्यानिषादश्च कांभोजीमेलके स्वराः ॥ १३६ ॥
षड्जे तिस्रस्तु ऋषभे पंच तिस्रस्तु गे स्मृताः ।
एकैव मे चतस्रः पे धे पंचैका निषादके ॥ १३७ ॥
इत्यस्य श्रुतयोऽस्माभिर्द्वाविंशतिरुदीरिताः ।
अष्टविंशस्त्वयं भेदो मेलप्रस्तारके स्मृतः ॥ १३८ ॥

१० इति कांभोजीमेलः ।

षड्जश्च पंचश्रुतिक ऋषभश्चांतराभिधः ।
गांधारस्तु मपौ शुद्धौ पंचश्रुतिकधैवतः ॥ १३९ ॥
काकल्याख्यनिषादश्चेत्येतावत्स्वरसंभवः ।
शंकराभरणाख्यानरागराजस्यमेलकः ॥ १४० ॥

षड्ज एकार्षभे पंच तिस्रो गे त्वेकिकैव मे ।
चतस्रः पे पंच धे च निषादे तिस्र एवच ॥ १४१ ॥
इत्यस्य श्रुतयोऽस्माभिर्द्वाविंशतिरुदीरिताः ।
एकोनत्रिंशद्भेदोऽयं मेलप्रस्तारके स्मृतः ॥ १४२ ॥

११ इति शंकराभरणमेलः ।

षड्जः पंचश्रुतिश्चाथ ऋषभोऽन्तरनामकः ।
गांधारश्च मपौ शुद्धौ षट्छ्रुतिर्धैवतस्तथा ॥ १४३ ॥
काकल्याख्यनिषादश्च स्वराः सामंतमेलके ।
षड्ज एकार्षभे पंच तिस्रो गे चैक मध्यमे ॥ १४४ ॥
चतस्रः पंचमे धे तु षट्छ्रुतिर्द्वौ निषादके ।
इत्यस्य श्रुतयोऽस्माभिर्द्वाविंशतिरुदीरिताः ॥ १४५ ॥
पूर्वोक्तमेलप्रस्तारे त्रिंशद्भेदोऽयमुच्यते ।

१२ इति सामंतमेलः ।

षड्जः षट्छ्रुतिको नाम ऋषभोऽन्तरसंज्ञिकः ॥ १४६ ॥
गांधारस्तु मपौ शुद्धौ पंचश्रुतिकधैवतः ।
काकल्याख्यनिषादश्चेदेतावत्स्वरसंभवः ॥ १४७ ॥
देशाक्षीनामरागः स्यादिति मेलसमाह्वयः ।
एका षड्जे च ऋषभे षट्छ्रुतिर्गे द्विरेक मे ॥ १४८ ॥
चतस्रः पे पंच धे च निषादे तिस्र एव च ।
इत्यस्य श्रुतयोऽस्माभिर्द्वाविंशतिरुदीरिताः ॥ १४९ ॥
पंचत्रिंशतिभेदोऽयं मेलप्रस्तारके स्मृतः ।

१३ इति देशाक्षीमेलः ।

षड्जः षट्छ्रुतिको नाम ऋषभोऽन्तरसंज्ञिकः ॥ १५० ॥
गांधारस्तु मपौ शुद्धौ षट्छ्रुतिर्धैवतस्वरः ।
काकल्याख्यनिषादश्चेदेतावत्स्वरसंभवः ॥ १५१ ॥

नाटाभिधानरागः स्यादिति मेलसमाह्वयः ।
एका षड्जे च ऋषभे षट्छ्रुतिर्गे द्विरेक मे ॥ १५२ ॥
चतस्रः पंचमे धे च षट्छ्रुतिर्द्वे निषादके ।
इत्यस्य श्रुतयोऽस्माभिर्द्वाविंशतिरुदीरिताः ॥ १५३ ॥
षट्त्रिंशद्भेदसंभूतो मेलप्रस्तारके स्मृतः ।

१४ इति नाटमेलः ।

वराळीमध्यमश्चाथ काकल्याख्यनिषादकः ॥ १५४ ॥
शेषाः शुद्धस्वराः शुद्धवराळीमेलसंज्ञिकः ।
एकः षड्ज ऋर्षभे तिस्रो गांधारे द्वे च सप्त मे ॥ १५५ ॥
एकैव पंचमे तिस्रो धैवते पंच नौ स्मृताः ।
इत्यस्य श्रुतयोऽस्माभिर्द्वाविंशतिरुदीरिताः ॥ १५६ ॥
एकोनचत्वारिंशोऽयं मेलः प्रस्तारके स्मृतः ।

१५ इति शुद्धवराळीमेलः ।

षड्ज शुद्धर्षभः साधारणगांधारसंज्ञिकः ॥ १५७ ॥
वराळीमध्यमश्चैव शुद्धौ पंचमधैवतौ ।
काकल्याख्यनिषादश्चेदेतावत्स्वरसंभवः ॥ १५८ ॥
मेलः पंतुवराळ्याख्यो रागश्च परिकीर्तितः ।
षड्ज एकार्षभे तिस्रस्तिस्रो गे मध्यमे तु षट् ॥ १५९ ॥
पंचमे त्वेकिका तिस्रो धैवते पंच नौ स्मृताः ।
इत्यस्य श्रुतयोऽस्माभिर्द्वाविंशतिरुदाहृताः ॥ १६० ॥
मेलप्रस्तारके पंचचत्वारिंशोऽयमुच्यते ।

१६ इति पंतुवराळीमेलः ।

षड्जः शुद्धर्षभश्चैव गांधारोऽन्तरनामकः ॥ १६१ ॥
वराळीमध्यमश्चाथ शुद्धौ पंचमधैवतौ ।
काकल्याख्यनिषादश्चेदेतत् सप्तस्वरोदितः ॥ १६२ ॥

शुद्धरामक्रियाख्यानरागमेलोऽयमुच्यते ।
षड्ज एकार्षभे तिस्रो गांधारे पंच मध्यमे ॥ १६३ ॥
चतस्रः पंचमे त्वेका धे तिस्रः पंच नौ स्मृताः ।
इत्यस्य श्रुतयोऽस्माभिर्द्वाविंशतिरुदाहृताः ॥ १६४ ॥
भेदोऽयमेकपंचाशो मेलप्रस्तारके स्मृतः ।

१७ इति शुद्धरामक्रियामेलः ।

षड्जस्वरश्च ऋषभः पंचश्रुतिसमन्वितः ॥ १६५ ॥
साधारणाख्यगांधारो वराळीमध्यमस्तथा ।
शुद्धश्च पंचमश्चैव पंचश्रुतिकधैवतः ॥ १६६ ॥
कैशिक्याख्यनिषादश्चेदेतत्सप्तस्वरोदितः ।
मेलः सिंहरवे रागे वेंकटाध्वरिकल्पिते ॥ १६७ ॥
षड्जे तिस्रोऽथ ऋषभे पंच गे त्वेकिकैव मे ।
षडेवपंचमे त्वेका धे पंचैकैव नौ स्मृताः ॥ १६८ ॥
इत्यस्य श्रुतयः प्रोक्ता मया द्वाविंशतिः स्फुटम् ।
भेदोऽयमष्टपंचाशो मेलप्रस्तार इष्यते ॥ १६९ ॥

१८ इति सिंहरवमेलः ।

षड्जस्वरश्च ऋषभः पंचश्रुतिसमन्वितः ।
गांधारोऽन्तरसंज्ञश्च वराळीमध्यमस्तथा ॥ १७० ॥
शुद्धश्च पंचमः पंचश्रुतिको धैवतस्तथा ।
काकल्याख्यनिषादश्च कल्याणीमेलके स्वराः ॥ १७१ ॥
षड्ज एकार्षभे पंच गांधारे तिस्र एव मे ।
चतस्रः पंचमेत्वेका पंच धे तिस्र एव नौ ॥ १७२ ॥
इत्यस्य श्रुतयोऽस्माभिर्द्वाविंशतिरुदीरिताः ।
पंचषष्ठितमो भेदो मेलप्रस्तारके मया ॥ १७३ ॥

१९ इति कल्याणीमेलः ।

इत्थं प्रदर्शिता मेला लक्ष्यलक्षणसंगताः ।
एकोनविंशदस्माभिः संप्रति प्रचरन्ति ये ॥ १७४ ॥

---

अथेदानीं विचार्यन्ते रामामात्येन लक्षिताः ।
मेलप्रकरणे मेलाः स्वरमेलकलानिधौ ॥ १७५ ॥
तथा हि विंशतिर्मेलानाह रामो विमूढधीः ।
युज्यते तत्कथं वेति तत्पृच्छामो वयं पुनः ॥ १७६ ॥
त्वदुक्तरीत्या सारंगनाटकेदारगौळयोः ।
संप्राप्तमेकमेलत्वं मेलाः स्युर्विंशतिः कथम् ॥ १७७ ॥
ननु विंशतिमेलानां मध्ये पंचदशस्वपि ।
मेलेषु पंचमेलानामंतर्भावोत्वयेरितः ॥ १७८ ॥
अन्यस्य पुनरन्यस्मिन्नान्तर्भावो भविष्यति ।
अंतराख्यानगांधारकाकल्याख्यनिषादयोः ॥ १७९ ॥
स्थाने प्रतिनिधित्वेन संगृह्येते यदा स्वरौ ।
च्युतमध्यमगांधारच्युतषड्जनिषादकौ ॥ १८० ॥
तदा विंशतिमेलानां मध्ये पंचदशस्वपि ।
मेलेषु पंचमेलानामन्तर्भावस्त्वयेरितः ॥ १८१ ॥
सालंगनाटकेदारगौलमेलद्वयेऽपि च ।
अविशेषेण भवता संग्राह्यत्वे सकर्मकौ ॥ १८२ ॥
च्युतमध्यमगांधारच्युतषड्जनिषादकौ ।
अन्यस्य पुनरन्यस्मिन्नन्तर्भावो भवेत्तदा ॥ १८३ ॥
ततो विंशतिमेलोक्तिव्याख्यातेयं दुरुत्तरा ।
मेलानां विंशतेर्यानि लक्ष्माण्युक्तानि हि त्वया ।
तानि सर्वाणि दृश्यन्ते विरुद्धान्येव केवलम् ॥ १८४ ॥
तत्रस्थाविपुलाख्यान्यायेन कातिचित् पुनः ।
लक्षणानि प्रदृश्यन्ते राम एष्वेव मोहितः ॥ १८५ ॥

न हि तान्यत्र शक्यन्ते दूषणानि त्वयेरिते ।
ग्रंथे गणयितुं दोषसहस्रग्रथने मया ॥ १८६ ॥
तथा हि भैरवो रागः शंकराभरणस्तथा ।
गौडिरागश्च कथितास्त्वया श्रीरागमेलजाः ॥ १८७॥
तत्कथं भैरवीशुद्धधैवतेनान्विता खलु ।
शंकराभरणो रागोऽन्तरगांधारवांस्तथा ॥ १८८ ॥
स काकलीनिषादश्च गौडी रागस्त्वयं पुनः ।
जातो मालवगौळाख्यरागमेळादिसंस्थितः ॥ १८९ ॥
रागाणां पुनरेतेषां जन्म श्रीरागमेलकः ।
कथं विकत्थसे राम राम राम तव भ्रमः ॥ १९० ॥
यच्चोक्तं भवता शुद्धरामक्रीरागमेलकः ।
पाडीरागार्द्रदेशाख्यरागजन्म भवेदिति ॥ १९१ ॥
तद्दोषजातये राम रामस्मरणमातनु ।
पाड्यार्द्रदेशिरागौ च प्रसिद्धौ गौळमेलजौ ॥ १९२ ॥
यदप्यदेवता राम रामबुद्धिविरामता ।
देशाक्षीमेल एवेष कैशिक्याख्यनिषादकम् ॥ १९३ ॥
प्राप्य कन्नडगौळः स्याद्गौळस्यातिमृषावहा ।
कन्नड्गौळः श्रीरागमेलैस्ततो मतो न किम् ॥ १९४ ॥
यच्च कन्नडगौळस्य मेले समुपजायते ।
घंटारव इति प्रोक्तं पातकेनामुना पुनः ॥ १९५ ॥
सत्यं विमोक्ष्यसे राम रामसेतुं गतोऽपि न ।
भैरवीमेलसंभूतो रागो घंटारवः खलु ॥ १९६ ॥
यद्यप्युक्तं त्वया नादरामक्रीरागमेलके ।
साधारणाख्यगांधारः संग्राह्य इति तत्वतः ॥ १९७ ॥
अपूर्वव्यकारत्वमावेदयति राम ते ।
नादरामक्रियामेलगांधारोऽप्यन्तराभिधः ॥ १९८ ॥

यच्चोक्तं रीतिगौळाख्यरागमेलस्य लक्षणम् ।
शुद्धाः सरिगमाः पश्च पंचश्रुतिकधैवतः ॥ १९९ ॥
कैशिक्याख्यनिषादश्चेत्यत्र रामक्रियस्तथा ।
भैरवीरागमेलोत्थो रीतिगौळः प्रकीर्त्यते ॥ २०० ॥
शुद्धर्षभश्च गांधारः पंचश्रुतिकधैवतः ।
यच्च केदारगौळाख्यरागमेलस्य लक्षणे ॥ २०१ ॥
संग्राह्यश्रुतषड्जाख्यनिषाद इति कल्पितम् ।
तत्रस्थानैव शोचामि तव रामाभिधां पुनः ॥ २०२ ॥
कैशिक्याख्यनिषादो हि मेले केदारगौळके ।
यदप्युक्तं त्वया राम हेज्जुज्जीरागमेलके ॥ २०३ ॥
काकल्याख्यनिषादस्तु संग्राह्य इति तत्पुनः ।
अतितुच्छं यतस्तस्मिन्मेले शुद्धनिषादकः ॥ २०४ ॥
गृह्यते निखिलैर्लोकैर्वादकैर्गायकैरपि ।
यच्चोक्तं भवता राम कांभोजीमेललक्षणम् ॥ २०५ ॥
गनी अन्तरकाकल्यौ रिधौ पंचश्रुती तथा ।
शेषाः शुद्धाश्च समपाः कांभोजीमेलके त्विति ॥ २०६ ॥
तत्तावत्त्वद्गीतिज्ञबहिष्कार्यत्वसाधनम् ।
कांभोजीरागमेलस्य कैशिक्याख्यनिषादकः ॥ २०७ ॥
इति नो वेत्ति किं वीणावादिनां गृहदास्यपि ।
तस्माद्वैकाररामोक्तान्मेलान्विश्वस्य वैणिकैः ।
कांतारकूपे वेष्ट्न्या उद्धृत्य भुजमुच्यते ॥ २०८ ॥

इतिश्रीवेंकटेश्वरदीक्षितस्य कृतौचतुर्दण्डि
प्रकाशिकायां चतुर्थं
मेलप्रकरणं संपूर्णम् ।

---

# पञ्चमं रागप्रकरणम् ।

चतुर्णां पुरुषार्थानां त्यागं यस्मात्करोत्यतः ।
त्यागराजइतिख्यातं सोमास्कंदमुपास्महे ॥ १ ॥

---

तुर्यप्रकरणे मेलाः सप्रपंचं निरूपिताः ।
अथ मेलोद्भवारागा लक्ष्यन्ते नातिविस्तरम् ॥ २ ॥
रंजयन्ति मनांसीति रागास्ते दशलक्षणाः ।
भवन्ति ते मतंगाद्यैः प्रापितान्यानि च क्रमात् ॥ ३ ॥
लक्षणानि दशोक्तानि लक्ष्यन्ते तावदादितः ।
ग्रहांशौ मंद्रतारौ च न्यासापन्यासकौ तथा ॥ ४ ॥
अथ सन्यासविन्यासौ बहुत्वं चाल्पता तथा ।
लक्षणानि दशैतानि रागाणां मुनयो ब्रुवन् ॥ ५ ॥
दशानामपि चैतेषां क्रमाल्लक्षणमुच्यते ।
येनादौ गीयते गीतं स्वरेण स भवेद्ग्रहः ॥ ६ ॥
बहुशो गीयते येन स्वरेणांशः स कथ्यते ।
अंशस्वरस्त्वसावेत्र जीवस्वर इति स्मृतः ॥ ७ ॥
नीचैः स्वरेण यद्गानं स मंद्रस्वर उच्यते ।
उच्चैः स्वरेण यद्गानं स तारस्वर उच्यते ॥ ८ ॥
न्यासस्वरः स कथितो येन गीतं समाप्यते ।
अवांतरसमाप्तिं यो रागस्यापि तनोति सः ॥ ९ ॥
अपन्यासः स स्मृतोऽन्यस्तूस्त्वात्यंतिकसमाप्तिकृत् ।
इति भेदो भवेन्न्यासापन्यासस्वरयोर्द्वयोः ॥ १० ॥
संन्यासो नाम गीताद्यखंडभागसमाप्तिकृत् ।
गीतखंडाद्यावयवस्यान्ते तिष्ठति स स्वरः ॥ ११ ॥

विन्यास एतौ सन्यासविन्यासौ भरतादिभिः ।
अंतर्भूतावपन्यासस्वर एवेति कीर्तितौ ॥ १२ ॥
अलंघनं तथाभ्यासो बहुत्वं द्विविधं मतम् ।
स्वरस्यास्पर्शनं यत्र लंघनं तत्र कीर्तितम् ॥ १३ ॥
साकल्येन स्वरस्पर्शस्त्वलंघनमिति स्मृतम् ।
यदेकस्य स्वरस्यैव नैरंतर्येण वाथवा ॥ १४ ॥
व्यवधानेन भूयोऽपि भूयोप्युच्चारणं हि तत् ।
अभ्यास इति शंसन्ति बहुत्वं द्विविधं ततः ॥ १५ ॥
अल्पत्वं च द्विधा प्रोक्तं अनभ्यासाच्च लंघनात् ।
पूर्वोक्ताभ्यासराहित्यं अनभ्यासः प्रकीर्तितः ॥ १६ ॥
पूर्वोक्तालंघनाभावो लंघनं परिकीर्तितम् ।
लक्षणानि दशाप्येवं लक्षितानि मया स्फुटम् ॥ १७ ॥
अथैतल्लक्षणान् रागान् उद्दिशामि क्रमादहम् ।
रागास्तावद्दशविधा भरताद्यैरुदीरिताः ॥ १८ ॥
ग्रामरागाश्चोपरागा रागा भाषाविभाषिकाः ।
तथैवांतरभाषाख्या रागांगाख्यास्ततःपरम् ॥ १९ ॥
भाषांगानि क्रियागांनि उपांगनीति च क्रमात् ।
दशस्वेतेषु रागेषु ग्रामरागादयः पुनः ॥ २० ॥
रागास्त्वंतरभाषान्ता मार्गरागा भवन्ति षट् ।
ततो गंधर्वलोकेन प्रयोज्यास्ते व्यवस्थिताः ॥ २१ ॥
तस्माद्रागांगभाषांगक्रियांगोपांगसंज्ञिकाः ।
रागाश्चत्वार एवैते देशिरागाः प्रकीर्तिताः ॥ २२ ॥
तत्र रत्नाकरग्रंथे शार्ङ्गदेवेन धीमता ।
चतुःषष्ट्यधिकं रागशतद्वयमुदीरितम् ॥ २३ ॥
लक्ष्यन्ते ते न कुत्रापि लक्ष्यवर्त्मनि संप्रति ।
ततः प्रसिद्धिवैधुर्यात् त्यक्त्वा रागांस्तु तान् पुनः ॥ २४ ॥

सर्वत्र लक्ष्यमार्गेऽत्र संप्रति प्रचरन्ति ये ।
तानस्मत्परमाचार्यतानपार्यसमुद्धृतान् ॥ २५ ॥
रागान्निरूपयिष्यामि लक्ष्यलक्षणसंमतान् ।
ग्रहांशन्याससमंद्रादिव्यवस्था तेषु यद्यपि ॥ २६ ॥
देशित्वात्सर्वरागेषु नैकान्तेन प्रवर्तते ।
तथापि लक्ष्यमाश्रित्य गानलक्ष्मानुसृत्य च ॥ २७ ॥
रागाणां लक्षणं ब्रूमो संप्रति प्रचरन्ति ये ।
निरूप्यमाणरागाणां षड्जादिक्रमतो ब्रुवे ॥ २८ ॥
लिख्यन्ते पंचभिः पद्यै रागा एव ग्रहस्वराः ।
नाटः सौराष्ट्रः सारंगनाटः शुद्धवसन्तकः ॥ २९ ॥
गुंडक्रिया मेचबौळिर्नादरामक्रियस्तथा ।
वराळी ललिता पाडिरागः सालगभैरवी ॥ ३० ॥
श्रीरागारभिधन्यासिशंकराभरणाभिधाः ।
रागा हिंदोलभूपाळहिंदोल्यथवसंतकाः ॥ ३१ ॥
आहर्याभेरीसामंतावसंताद्या च भैरवी ।
हेज्जुज्जिमालवश्रीश्च शुद्धरामक्रिया तथा ॥ ३२ ॥
कांभोजी च मुखारी च देवगांधारिका तथा ।
नागध्वनी सामरागस्तथा सामवराळिका ॥ ३३ ॥
एकत्रिंशदिमे रागाः षड्जन्यासग्रहांशकाः ।
गुर्जरी भिन्नषड्जश्च रेवगुप्तिस्त्रयोप्यमी ॥ ३४ ॥
रिन्यासांशग्रहाः प्रोक्ता मतंगभरतादिभिः ।
नारायणाख्यदेशाक्षी देशाक्षी राग एवच ॥ ३५ ॥
नारायण्यथ कर्णाटो-बंगालश्चेति विश्रुताः ।
चत्वारस्तु इमे रागा गन्यासांशग्रहास्मृताः ॥ ३६ ॥
जयंतसेनो बहुली मध्यमादी इमे त्रयः ।
मग्रहा मध्यमन्यासा मांशकाः परिकीर्तिताः ॥ ३७ ॥

आंधाळीचैव सावेरी पंन्यासांशग्रहावुभे ।
रागो मल्लहरी घंटारवो वेलावली तथा ॥ ३८ ॥
भैरवी चेति चत्वारो धन्यासांशग्रहाः स्मृताः ।
गौळकेदारगौळौ द्वौ छायागौळाभिधस्तथा ॥ ३९ ॥
रीतिगौळः पूर्वगौळो गौळो नारायणाभिधः ।
रागः कन्नडगौळश्च सप्तगौळा इमे पुनः ॥ ४० ॥
निषादग्रहनिन्यासनिषादांशाः प्रकीर्तिताः ।
चतुःपंचाशदुद्दिष्टा इति रागग्रहादिभिः ॥ ४१ ॥
अथैतेषां क्रमाल्लक्ष्म लक्ष्यलक्षणसंगतम् ।
नाटो भाषांगरागोऽत्र वादी षड्जः स्वरो मतः ॥ ४२ ॥
संवादी पंचमो ज्ञेयो गनी प्रोक्तौ विवादिनौ ।
अनुवादि रिधद्वंद्वं चायं सायं प्रगीयते ॥ ४३ ॥
अवरोहे निधगरिवर्जमेनं प्रचक्षते ।
संपूर्णरागः चैवैष संमतो गानवेदिनाम् ॥ ४४ ॥
सौराष्ट्ररागो मेलस्य गौळस्याभ्युदयः पुरा ।
संपूर्णश्चैष वादी च षड्जः संवादिनौ मपौ ॥ ४५ ॥
निषादोऽनुवादी देयौ रिधौ द्वौ च विवादिनौ ।
सर्ववेलासु गातव्यं ख्यातं संगीतवेदिभिः ॥ ४६ ॥
सालंगनाटः संपूर्णः संभूतो गौळमेलतः ।
अस्यापि च भवेद्वादी षड्जः संवादिनौ मपौ ॥ ४७ ॥
विवादिनौ गनी चानुवादिनौ धैवतर्षभौ ।
सायंगेयः प्रगातव्यः संगीतांबुधिपारगैः ॥ ४८ ॥
रागः शुद्धवसंताख्यो रागांगो गीयते प्रगे ।
शंकराभरणाख्यातरागमेलः समुद्भवः ॥ ४९ ॥
आह वैंकाररामस्त्वारोहे पंचमवर्जनात् ।
षाडवत्वं न तद्युक्तं यस्मादस्यावरोहणात् ॥ ५० ॥

आरोहेऽपि प्रयोगोऽस्ति तस्मात्संपूर्णरागता ।
दिनस्य चरमे यामे गीतः सोऽयं शुभावहः ॥ ५१ ॥
गुंडक्रिया गौळमेलजाता संपूर्णता मता ।
नादरामक्रियारागः संपूर्णस्वरसंगतः ॥ ५२ ॥
गेयः सायाह्नसमये गौळमेलसमुद्भवः ।
वराळिरागः संपूर्णो वादी षड्जोऽथ कथ्यते ॥ ५३ ॥
संवादिनौ मपौ ज्ञेयौ गनीचैव विवादिनौ ।
ऋषभोह्यनुवादी स्यात्सर्वदा एष गीयते ॥ ५४ ॥
प्रगे प्रगेया ललिता पवर्जा गौळमेलजा ।
पाडीरागो गौळमेलप्रभूतः षाडवो मतः ॥ ५५ ॥
गलोपश्चरमे यामे दिनस्य परिगीयते ।
श्रीरागमेलसंभूतो रागः सालगभैरवी ॥ ५६ ॥
संपूर्णस्वरसंयुक्ता यामे गेया तुरीयके ।
श्रीरागः परिपूर्णोऽपि गधयोः स्थानवर्जितः ॥ ५७ ॥
गेयः सायह्नसमये सर्वसंपत्प्रदायकः ।
आरभीनामको रागः संपूर्णस्वरसंगतः ॥ ५८ ॥
मेलस्त्वस्य स एवस्याच्छंकराभरणः स्वयम् ।
धन्यासिरागो रागांगो जातः श्रीरागमेलतः ॥ ५९ ॥
रिधलोपादौडुवोऽयं प्रातर्गीतः शुभप्रदः ।
शंकराभरणो रागः पूर्णः सायं प्रगीयते ॥ ६० ॥
हिंदोलसंज्ञको रागो भैरवीमेलसंभवः ।
औडुवो रिधलोपेन सर्वकालेषु गीयते ॥ ६१ ॥
भूपालः प्रातरुद्गेय औडुवो मनिवर्जनात् ।
एष रागांगरागेषु गणितः शार्ङ्गसूरिणा ॥ ६२ ॥
आहरीमेलजः पूर्णो हिंदोलाद्यवसन्तकः ।
संपूर्णस्त्वाहरीरागः षड्जपंचमकौ क्रमात् ॥ ६३ ॥

वादिसंवादिनौ तत्र गनी चैव विवादिनौ ।
अनुवादिस्वरौ ज्ञेयौ रिधौ सायं प्रगीयते ॥ ६४ ॥
आभेरिरागः पूर्णोऽयमाहरीमेलसंभवः ।
सामंतरागः पूर्णोऽत्र वादिसंवादिनौ सपौ ॥ ६५ ॥
विवादिनौ निगावत्र स्वराः स्युरनुवादिनः ।
शंकराभरणच्छायः सायमेष प्रगीयते ॥ ६६ ॥
वसंतभैरवीरागः संपूर्णोप्यल्पपंचमः ।
प्रातर्गातव्य इत्येवं ख्यातो वातात्मजन्मना ॥ ६७ ॥
हेज्जुज्जी रागः संपूर्णो यामेह्ले गीयतेऽन्तिमे ।
षाडवो मालवश्रीः स्यात् रागांगमृषभोज्झितः ॥ ६८ ॥
मेलः श्रीरागमेलस्य सर्वकालेषु गीयते ।
संपूर्णः शुद्धरामक्री वादी षड्जोऽत्र कथ्यते ॥ ६९ ॥
संवादी पंचमः प्रोक्तो गनी चैव विवादिनौ ।
अनुवादिरिधद्वंद्वं गेयं सायं प्रगीयते ॥ ७० ॥
क्रियांगरागोऽयमिति भरताद्यैरुदीरितः ।
कांभोजिरागः संपूर्णोऽप्यारोहे मनिवर्जितः ॥ ७१ ॥
सायं संगीयते सोऽयं संगीतागमपारगैः ।
मुखारिरागः संपूर्णो वादिसंवादिनाविह ॥ ७२ ॥
सपौ विवादिनौ त्वत्र गनी चैवानुवादिनौ ।
रिधाविति च वेत्तव्यं गातव्यः सर्वदाप्ययम् ॥ ७३ ॥
संपूर्णो देवगांधारीरागः श्रीरागमेलजः ।
गातव्यः प्रातरेवैष नागध्वनिरथोच्यते ॥ ७४ ॥
संपूर्णरागो रागांगः शंकराभरणोत्थितः ।
शंकराभरणात्मेलात्संभूतः सामरागकः ॥ ७५ ॥
संपूर्णः सततं गेयो मंद्रमध्यमभूषितः ।
रागः सामवराळ्याख्यः सामवेदसमुद्भवः ॥ ७६ ॥

संपूर्णो गीयते नित्यं इत्येकत्रिंशदीरिताः ।
रागाः सलक्षणाः सम्यक् षड्जन्यासग्रहांशकाः ॥ ७७ ॥
अथर्षभग्रहाणां त्रिरागाणां लक्ष्म चक्ष्महे ।
संपूर्णो गुर्जरीराग रागांगगौळमेलजः ॥ ७८ ॥
प्रगे प्रगेयः कथितस्त्वरोहे धवर्जितः ।
भिन्नष्षड्जाख्य रागोऽयं जातो भूपालमेलतः ॥ ७९ ॥
संपूर्णः प्रथमे यामे दिनस्य परिगीयते ।
रेवगुप्तिस्तु हेज्जुज्जिमेलोत्थो मनिवर्जनात् ॥ ८० ॥
औडुवश्चरमे यामे दिवसस्यैष गीयते ।
चत्वारोऽथ निरूप्यन्ते रागा गांधारकग्रहाः ॥ ८१ ॥
नारायणाद्यदेशाक्षिः संपूर्णो गीयते प्रगे ।
शंकराभरणाख्यानरागमेलः समुद्भवः ॥ ८२ ॥
संपूर्ण एव देशाक्षी रागः प्रातः प्रगीयते ।
मेलो नारायणीरागः शंकराभरणोदितः ॥ ८३ ॥
संपूर्णस्त्वैष गातव्यः प्रातः संगीतकोविदैः ।
रागः कर्णाटबंगालो भाषांगगौळमेलजः ॥ ८४ ॥
प्रातःकालेषु गातव्यः षाडवोऽयं निवर्जितः ।
सर्वदाप्येष गातव्यो गीतज्ञैः शुभरक्तिदः ॥ ८५ ॥
मध्यमादिस्तु रागांगरागः श्रीरागमेलजः ।
रिधलोपादौडुवोऽयं सायंकाले प्रगीयते ॥ ८६ ॥
रक्तिरेतस्य रागस्य मुरल्यां दृश्यतेऽधिकाम् ।
बहुलीगौळमेलोत्थो रागः मध्यमवर्जनात् ॥ ८७ ॥
षाडवो गीयते सोऽयं सायंकाले विचक्षणैः ।
पन्यासांशग्रहौ रागौ निरूप्येते मयाधुना ॥ ८८ ॥
निगलोपादौडुवोऽयमांधालीराग ईरितः ।
मेलः श्रीरागमेलस्य कथ्यते गीतवेदिभिः ॥ ८९ ॥

गौळमेलसमुद्भूतः सावेरीराग ईरितः ।
आरोहे गनिलोपोऽयं प्रातर्गीतो विचक्षणैः ॥ ९० ॥
निरूप्यन्तेऽधुनारागाश्चत्वारो धैवतग्रहाः ।
ख्याता मलहरी गौळमेलजाता निलोपतः ॥ ९१ ॥
षाडवत्वं गता प्रातर्गातव्या गीतकोविदैः ।
घंटारवाख्यरागस्तु भैरवीमेलसंभवः ॥ ९२ ॥
संपूर्णस्वरसंयुक्तः सर्वकालेषु गीयते ।
वेलावली तु भाषांगजातः श्रीरागमेलतः ॥ ९३ ॥
संपूर्णभावं भजते प्रभाते चैष गीयते ।
सायाह्नरागः संपूर्णः स्तूपांगभैरवीस्मृतः ॥ ९४ ॥
वादी षड्जोऽत्र संवादीपंचमः स्याद्विवादिनौ ।
स्वरौ निषादगांधारौ रिधौ चैवानुवादिनौ ॥ ९५ ॥
निरूप्यन्ते सप्तरागा निन्यासांशग्रहा मया ।
गौळस्तु षाडवो रागो रागांगधैवतोऽज्झितः ॥ ९६ ॥
वादिसंवादिनावत्र रिगौ शश्वत्प्रगीयते । (?)
केदारगौळः संपूर्णः कांभोजीमेलसंभवः ॥ ९७ ॥
गेयोऽसौ सुतरां रक्तिदायको गायकोत्तमैः ॥
उपांगरागइत्येवं ऊचिरे भरतादयः ॥ ९८ ॥
गौळमेलोद्भवच्छायागौळस्संपूर्णतांगतः ।
रीतिगौळाख्यरागस्तु भैरवीमेलसंभवः ॥ ९९ ॥
संपूर्णश्चैष गातव्यः सोऽयं संगीतकोविदैः ।
पूर्वगौळस्य मेलः स्याच्छुद्धगौळस्य यः स्मृतः ॥ १०० ॥
संपूर्णश्चैष गातव्यः सायाह्ने गीतकोविदैः ।
नारायणाद्यगौळस्तु संपूर्णः परिकीर्तितः ॥ १०१ ॥
केदारगौळमेलोत्थः सायाह्ने त्वेष गीयते ।
रागः कन्नडगौळोऽयं जातः श्रीरागमेलतः ॥ १०२ ॥

संपूर्णोऽपि कदाचित्स्यादारोहे त्यक्तमध्यमः ।
रागः सिंहरवो नाम षड्जन्यासग्रहांशकः ॥ १०३ ॥
सोऽयमस्माभिरुन्नीतः संपूर्णो गीयते सदा ।
लक्षिताः पंचपंचाशदितिरागाः स्फुटं मया ॥ १०४ ॥
गीतठायप्रबंन्धा हि तानप्पाद्यैः प्रवर्तिताः ।
देशीयरागाः कल्याणीप्रमुखाः सन्ति कोटिशः ॥ १०५ ॥
गीतठायप्रबंधेषु नैते योग्याः कदाचन ।
कल्याणीरागः संपूर्ण आरोहे मनिवर्जितः ॥ १०६ ॥
गीतप्रबंधायोग्योऽपि तुरुष्काणामतिप्रियः ।
रागः पंतुवराळ्याख्यः संपूर्णः पामरप्रियः ॥ १०७ ॥
गीतठायप्रबंधानां दूराद्दूरतरः स्मृतः ।
एवं प्रकारेणोन्नेया रागा देशसमुद्भवाः ॥
आनंत्यात्संकराच्चैव नास्माभिर्लक्षिताः पृथक् ॥ १०८ ॥

इति श्रीमदद्वैतविद्याचार्यसांनिचित्यसर्वतोमुखातिरात्रसांनिचित्यासवाजपेययाजिगोविंददीक्षितनागमांबिकावर द्वितीयनंदनस्य सांनिचित्यसर्वक्रतुयाजियज्ञनारायणदीक्षिताभ्यवहितानुजस्य अच्युतविजयराघवभूपालप्रेरितस्य वेंकटेश्वर दीक्षितस्य कृतौ चतुर्दंडिप्रकाशिकायां

पंचमरागप्रकरणम्

संपूर्णम् ।

समाप्तम्

# चतुर्दण्डिप्रकाशिकान्तर्गतस्वरपत्रकम् ।

| श्रुतिनामानि. | शुद्धस्वराः | विकृतस्वराः |
|---|---|---|
| १ तीव्रा | | कैशिकनिषादः |
| २ कुमुद्वती | | |
| ३ मंदा | | काकलीनिषादः |
| ४ छंदोवती | षड्जः | |
| ५ दयावती | | |
| ६ रंजनी | | |
| ७ रक्तिका | ऋषभः | |
| ८ रौद्री | | |
| ९ क्रोधा | गांधारः | |
| १० वज्रिका | | साधारणगांधारः |
| ११ प्रसारिणी | | |
| १२ प्रीति | | अन्तरगांधारः |
| १३ मार्जनी | मध्यमः | |
| १४ क्षिती | | |
| १५ रक्ता | | |
| १६ संदीपिनी | | वराळीमध्यमः |
| १७ आलापिनी | पंचमः | |
| १८ मदंती | | |
| १९ रोहिणी | | |
| २० रम्या | धैवतः | |
| २१ उग्रा | | |
| २२ क्षोभिणी | निषादः | |

# चतुर्दण्डिप्रकाशिकान्तर्गतजनकमेलजन्यरागपत्रकम् ।

| जनकमेलनामानि | जन्यरागाः |
|---|---|
| १ मुखारी | ( १ ) मुखारी |
| २ सामवराळी | ( १ ) सामवराळी. |
| ३ भूपालः | ( २ ) भूपालः. भिन्नषड्जः. |
| ४ वसंतभैरवी | ( १ ) वसंतभैरवी. |
| ५ गौळः | (१५) गौळः, शुंडक्रिया, सालंगनाटः, नादरामक्रिया, ललिता, पाडी, गुर्जरी, बहुली, मल्हरी, सावेरी, छायागौळः, पूर्वगौळः, कर्णाटकबंगालः, सौराष्ट्रः. |
| ६ आहरी | ( २ ) आभेरी, हिंदोलवसंतः. |
| ७ भैरवी | ( ५ ) भैरवी, हिंदोलः, आहीरी, घंटारवः, रीतिगौळः. |
| ८ श्रीरागः | ( ८ ) श्रीः, सालगभैरवी, धन्यासी, मालवश्रीः, देवगांधारः, आधांली, वेलावली, कंनडगौळः. |
| ९ हेजुज्जी | ( २ ) हेजुज्जी, रेवगुप्तिः. |
| १० कांभोजी | ( ३ ) कांभोजी, केदारगौळः, नारायणगौळः. |
| ११ शंकराभरणः | ( ७ ) शंकराभरणः, आरभी, नागध्वनिः, सामः,शुद्धवसंतः,नारायणदेशाक्षी, नारायणी. |
| १२ सामंतः | ( १ ) सामंतः. |
| १३ देशाक्षी | ( १ ) देशाक्षी. |
| १४ नाटः | ( १ ) नाटः. |
| १५ शुद्धवराळी | ( १ ) वराळी. |
| १६ पंतुवराळी | ( १ ) पंतुवराळी. |
| १७ शुद्धरामक्रिया | ( १ ) शुद्धरामक्रिया. |
| १८ सिंहरवः | ( १ ) सिंहरवः. |
| १९ कल्याणी | ( १ ) कल्याणः. |